खाभावे लिङ्गम्। अनुभूते स्मृतिनियमाभावेनाप्रयोजकत्वात् । न च स्वसत्तायामवश्यानुभवस्य नियमेनास्मरणमभावव्याप्तमिति वाच्यम् । अनुभूतेऽपि सुखादौ कस्मिंश्चित्तदभावदर्शनात् । किं च तदा दुःखवत्तया या स्मृतिस्तदभावो हेतुः । तदा यद्‌ दुःखं तद्‌गोचरस्मृतिविरहो वा तदा यो दुःखवत्तया स्मृतिविरहः-स वा ?।

सौषुप्तिकदुःखाभावविषय एवायं परामर्श इत्याशङ्कयाह-स चेति । सुषुप्तौ दुःखस्मरणायोगेन तदभावानुभवाभावात्तत्परामर्शानुपपत्तेरिति। हेतुमाह-दुःखाभावस्येति । सुप्तौ सुखानुभवाङ्गीकारे तद्भङ्गप्रसङ्गात्, तदनुभवाभावे तत्परामर्शस्याप्यनुपपत्तेः "सुखमस्वाप्सम्" इत्युत्थितस्य दुःखाभावानुमितिरेवेति शङ्कते-नन्विति । अनित्यज्ञानोपरमरूपसुषुप्तेः नित्येन सुखानुभवेन विरोधाभावात्तदधीनसुखपरामर्श एवायमित्यभिप्रेत्याह-न प्रसिद्धेति। सुखविषयत्वेन संमतपरामर्शतुल्यत्वादित्यर्थः। सुप्तौ सुखस्याभावात्कथं तद्विषयत्वमस्येत्याशङ्क्याऽनित्यसुखाभावेऽपि नित्यसुखविषयत्वोपपत्तेरित्याह-सुखविषयत्व इति । अनुमितिकरणस्यापि निर्वक्तुमशक्यत्वात्परिशेषादयं परामर्श इत्याह-दुःखाभावेति । "अहं सुषुप्तिकाले दुःखरहितः तत्कालीनदुःखवत्तया स्मरणरहितत्वात्सुख्यहमिव"इत्यादि लिङ्गमस्तीत्याशङ्क्याह-न तावदिति। कदाचिदनुभूतस्य विद्यमानस्यापि घटादेरस्मर्यमाणत्वान्नास्मरणं प्रमेयाभावव्याप्तमित्यर्थः । ननु दुःखस्य ज्ञायमानसत्ताकतया घटादिविल-

क्षणत्वात्तदस्मरणं तदभावमन्तरेणानुपपन्नमिति चेन्न । चिरातीतसुखादेस्तत्कालीनतया स्मरणाभावेऽपि तद्वा सत्त्वादित्याह-न च स्वसत्तायामिति ।

किं च तत्कालीनत्वं स्मरणस्य विशेषणमुत दुःखस्य किं वा स्मरणविरहस्येति विकल्पयति किं चेति ॥

प्रथमद्वितीययोः प्रतियोग्यप्रसिद्ध्या हेत्वसिद्धि-माह-न प्रथमाविति ।

प्रतियोग्यप्रसिद्ध्या हेत्वसिद्धिः । न प्रथमौ । सुषुप्तिकालीनदुःखतद्गोचरस्मृत्योरसत्त्वेन तद्विरहासिद्धेर्व्यधिकरणतद्विरहयोरलिङ्गाच्च । नापि तृतीयः । दुःखवत्यात्मनि व्यभिचारात् । दुःखानुभवकाले तत्स्मृतिविरहसत्त्वात् । स्वापकालीनतया स्मृतिविरहस्येदानीमवगन्तुमशक्यत्वाच्च । न च तदापि सुषुप्तिकालीनदुःखाभावोऽस्तीति न व्यभिचार इति वाच्यम् । सुषुप्तिकालीनदुःखस्याभावात् । तत्कालीनत्वेन दुःखाभावस्य पूर्वमज्ञानात् । न चैवं प्रातःकालीनतया चत्वरादौ कथं गजाद्यभावानुमितिरिति वाच्यम् । क्वचिद् गजविरोधिपदार्थवत्तया स्मरणात् । क्वचित्प्रतियोगिनो देशान्तरसम्बन्धित्वज्ञाने । तदुभयाभावे तु अभावस्मरणं क्वाचित् । संभवति हि पूर्वमप्यालोकविशिष्टे देशे योग्यानुपलब्ध्या अभा-

वानुभवः प्रतियोगिज्ञानमप्यभावज्ञानबलात्क-ल्प्यम् । लिङ्गज्ञानव्याप्तिज्ञानपरामर्शानां कल्प-नातोऽभावज्ञानकल्पन एव लाघवात् ॥

नन्वेकस्य सुषुप्तिकालेऽपरस्य दुःखतत्स्मरणयोः संभवान्न तदभावोऽसिद्ध इत्यत आह-व्यधिकरणेति । स्वदुःखे सत्यपि परकीयदुःखतत्स्मरणयोर्विरहस्यापि सत्त्वेन व्यभिचारादित्यर्थः । स्वापकालीनो यो दुःखस्मृतिविरहः तस्य दुःखानुभवकालेऽपि सत्त्वाद् व्यभिचारेण दूषयति-नापीति । स्वापकाले दुःखविरहवत्स्मृतिविरहोऽपि दुर्विज्ञेयत्वादसिद्ध इत्याह स्वापेति । यदुक्तं 'दुःखवत्यात्मनि व्यभिचारादिति, तत्परिहारमाशङ्क्याह-न च तदापीति । किं तदापि सुषुप्तिकालीनं यद् दुःखं तदभावोऽस्तीत्युच्यते, किं वा सुषुप्तिकालीनो यो दुखाभावः सोऽस्तीति ?। नोभयथापीत्याह-सुषुप्तीति । पूर्वमज्ञानादिति । तथा च साध्याप्रसिद्धिरिति भावः । अस्मर्यमाणस्याभावानुमापकत्वे प्रसिद्धाभावोऽपि न सिद्ध्येदिति शङ्कां निराकरोति-न चैवमिति । गजावस्थानविरोधिनी गवादिसंकुलता स्मर्यमाणा तदभावानुमापिकेत्याह-क्वचिदिति । तदभावे गजस्यान्यत्र सत्त्वं स्मर्यमाणं चत्वरे तदभावानुमापकमित्याह-क्वचित्प्रतियोगिन इति । उभयस्याप्यनुमापकस्याभावे का गतिस्तत्राह-तदुभयेति । ननु प्रातश्चत्वरं प्रविष्टेनापि तदभावाननुभवात्कथं सायं तत्स्मृतिरित्याशङ्क्य सामग्रीसत्त्वात्तदभावो ऽनुभूत एवेत्याह-संभवति हीति । तदा गजस्मरणाभावात्कथं तदभावोपलब्धिसामग्रीत्याशङ्क्य

तदपि कार्यबलात्कल्प्यमित्याह-प्रतियोगीति । अननु-
भूयमानज्ञानकल्पनमेव दोष इत्याशङ्क्यानुमानपक्षेऽननु
भूयमानबहुकल्पनमस्तीत्याह-लिङ्गज्ञानेति ॥

किं चानुमानपक्षे स्मरणाभावेनानुभवाभावमनु-
माय तेन गजाभावोऽनुमातव्यः । तत्रापि नानुपलम्भ-
मात्रं प्रमेयाभावे लिङ्गव्यभिचारात् । किं तु योग्यत्वे
सति । योग्यत्वं च प्रतियोगितद्व्याप्येतरतदुपलम्भकस-
मवधानम् । तथा च गजत्वादिविशेषणज्ञानस्यापि तदु-
पलम्भकत्वात्तदपि प्रातरत्वया कल्प्यम् । तथा च प्रति
योगिज्ञानं दुर्वारमित्याह-त्वयापीति ।

अनुमानपक्षे प्रत्यक्षानुभवाभावानुमानपूर्वकं गजाभावानुमानम् ।

त्वयाऽप्यननुभूयमानविशेषणज्ञानस्य पूर्वं कल्प्यत्वात् ।
अन्यथा प्रतियोगितद्व्याप्येतरविशेषणज्ञानाभा-
वेनानुमाने लिङ्गाभावात । अत एव क्वचित्त-
त्तुल्यवत्तया ज्ञायमानेऽपि गृहादौ पिपीलिका-
द्यभावसंशयो दृश्यते । अनुमाननियमपक्षे तन्न
स्यात् । तत्रापि तल्लिङ्गनिश्चयसंभवात् । न
चानुभूते प्राणिधनादौ नियमेन स्मर्यमाणत्व-
मपि लिङ्गविशेषणं पिपीलिकादेस्तदभावात्तत्र
संशय इति वाच्यम् । देवदत्तादेरपि तदज्ञानद-
शायामभावज्ञानदर्शनात् । तत्र च स्मरणकल्पना-
यामन्यत्रापि तदस्तु । किं च देवदत्तगोचरप्रत्य-
क्षप्रागभावविरहाद्वा सामग्र्यन्तरप्रतिबन्धाद्वा वि-

द्यमानेऽपि तदननुभवसंभवादप्रयोजकमनुमानम् । स्वीक्रियते खलु त्वया प्रागभावेतरकारणसत्त्वेऽपि तद्विरहात्कार्योत्पत्त्यभावः ॥

यत्रास्मदुक्तलिङ्गद्वयं नास्ति । नापि पूर्वानुभवः । तत्राभावनिश्चयोऽपि न नेतव्य इति व्यतिरेकमाह-अत एवेति । तत्तुल्यवत्तयेति । पिपीलिकादितुल्यतुषादिमत्तयेत्यर्थः । प्रातश्चत्वरे गजाभावनिश्चयस्यानुमितित्वनियमपक्षे पिपीलिकाद्यभावसंशयो न स्यात् । तत्तुल्यवत्तया स्मर्यमाणत्वे सति तद्वृत्तयाऽस्मर्यमाणत्वलिङ्गस्यात्रापि सत्त्वादित्याह-अनुमानेति । ननु चित्तसमाधाने सत्यनुभूतस्य स्मरणयोग्यत्वमप्युक्तलिङ्गविशेषणं पिपीलिकादेश्चैतदभावान्न तदभावनिश्चय इति चेन्न । उक्तविशेषणविशिष्टलिङ्गाप्रतिसन्धानेऽपि झटिति कालान्तराभावनिश्चयदर्शनादित्याह-न चानुभूत इति । देवदत्ताभावस्य स्मर्यमाणत्वे गजाद्यभावेऽपि तथैव स्यादित्याह-तत्र चेति । परमते कुत्राप्यभावानुमानं न संभवतीत्याह-किं चेति । अधिकरणे प्रतियोगिसत्त्वविरोध्येवानुपलम्भोऽभावानुमापकः । न चात्रानुपलम्भस्य तद्विरोधित्वम् । प्रतियोगिसत्त्वेऽप्युपलम्भप्रागभावाभावात्सामग्र्यन्तरप्रतिबन्धाद्वाऽनुपलम्भोपपत्तेरिति भावः । तत्र प्रागभावाभावेन कार्यासंभवमाह-स्वीक्रियत इति । प्रागभावाभावादेवोत्पन्नस्य पुनरनुत्पत्त्यङ्गीकारादित्यर्थः ॥

सामग्र्यन्तरप्रतिबन्धादनुपलब्धावुदाहरणमाह-तुरगादाविति ।

अनुपलब्धौ सामग्र्येः तुरगादौ वेगेन गच्छतः पत्रप्रतिबन्धकत्वम् । सत्त्वादिस्मृतिमतो धर्मीन्द्रियसन्निकर्षे समानेऽपि कस्यचित् ज्ञानं कस्य चिन्नेति । एकेन्द्रियग्राह्याणामपि कस्य चित्सामग्र्या कस्य चित्प्रतिबन्धश्च । अनुभवेऽपि प्रमुष्टतत्ताकस्मृतिवदितरस्मरणोपपत्तेश्चाप्रयोजकम् । तस्मादुक्तलिङ्गद्वयाभावे स्मरणमभावस्य । अन्यथा संशय एव । यदि च प्रागभावोऽपि न कारणम् संशयनियमोऽप्यदृष्टादेव, अर्थे च स्मर्यमाणत्वनियमस्तर्हि "देवदत्तः प्रातःकालीने सर्वतोऽवलोकिते गृहे वर्त्तमानाभावप्रतियोगी तदानीं गेहनिष्ठतत्तुल्यस्मरणसमानकालीनस्मरणाविषयत्वे सति विषयविशेषत्वात्, संप्रतिपन्नवत्" इत्यस्तु ।

कस्य चिदिति । वृक्षविशेषस्येत्यर्थः । एकेन्द्रियग्राह्येष्वपि कस्य चित् ज्ञानसामग्र्या कस्य चित् ज्ञानं प्रतिबध्यते, किमु वक्तव्यं भिन्नेन्द्रियग्राह्येष्वित्यभिप्रेत्याह-एकेन्द्रियेति । एवमस्मरणमप्यनुपलम्भे न लिङ्गमित्याह अनुभवेऽपीति । तद्विरुद्धदार्यवत्तया स्मर्यमाणत्वादिलिङ्गद्वयाभावेऽप्यभावनिश्चयः स्मृतिरेव । तस्या अप्यभावे संशय एवेत्युपसंहरति-तस्मादिति । प्रातर्गजाद्यभावस्यानुमेयत्वेऽपि न सौषुप्तिकदुःखाभावस्य तदिति वक्तुं पूर्वोक्ताप्रयोजकत्वबीजाभावमङ्गीकरोति-यदि चेति । पिपीलिकादिसंशयनियम इत्यर्थः । अर्थे चेति । अनुभूत इति शेषः । देवदत्तः प्रातःकालीनेऽव-

लोकिते गृहे सर्वत्र वर्तमानाभावप्रतियोगी प्रातःकालीनगेहनिष्ठा देवदत्ततुल्या ये स्तम्भादयस्तत्स्मरणैककालस्मरणाविषयत्वे समुपेक्षणीयविषयातिरिक्तत्वात् बाह्यवृक्षवदित्यनुमानवाक्यार्थः । समयान्तरे देवदत्तस्य गृहे सत्त्वेन बाधपरिहाराय प्रातःकालीन इति विशेषणम् । गृहैकदेशे देवदत्तसत्त्वेऽपि तन्निष्ठाभावप्रतियोगित्वसम्भवेनार्थान्तरतावारणाय सर्वत इति । सर्वत्र इत्यर्थः । अनवलोकितगृहे देवदत्तस्य सर्वत्र बाधपरिहारायावलोकित इति । गेहनिष्ठोपेक्षणीयविषयेषु व्यभिचारवारणाय विशेषत्वादिति । स्तम्भादौ व्यभिचारवारणाय स्मरणाविषयत्वे सतीति । अनुमानकाले देवदत्तस्यापि स्मर्यमाणत्वादसिद्धिवारणाय गेहनिष्ठतत्तुल्यस्मरणकालीनेत्युक्तम् । गेहपदं च सर्वतोऽवलोकितगेहपरम् । तथा च गेहनिष्ठेऽपि गेहानवलोकनप्रयुक्तस्मरणादिविषये न व्यभिचारः । समयान्तरे गेहनिष्ठस्तम्भादिभिः सह स्मर्यमाणत्वादसिद्धिवारणाय तदानीमित्युक्तम् ॥

स्वापकालीनदुःखाभावे पूर्वोक्तलिङ्गद्वयमिदञ्च नास्तीत्याह-न चेति ।

सुषुप्तौ दुःखाभावे पूर्वोक्तहेतुद्वय- न च प्रकृते सुषुप्तिस्थापनपूर्वकोच्यमानखण्डनम् । कालीनदुःखविरोधि

स्मरणमस्ति न वा दुःखं सुषुप्तिकालीनात्मनिष्ठप्रतियोगि अन्यत्रवर्तमानत्वादित्यनुमानम् । तदभावस्य तत्र सत्त्वेऽपि सकलदुःखाभावस्य तद्वृतित्वासिद्धेः । "सुखमहमस्वाप्सम्" इति ज्ञानस्य सकलदुःखाभावविषयकत्वस्यैव वक्तव्यत्वात् ।

एकदुःखवति दुःखाभावे सुखारोपादर्शनात् । नापि स्मरणं पूर्वं तदनुभवाभावात् । कालविशेषनिष्ठसकलज्ञानाभावज्ञानं विना सुषुप्तित्वज्ञानासंभवाच्च । न हि पूर्वकालस्य सकलज्ञानाभाववत्त्वं केन चिदनुभवं विना ज्ञातुं शक्यते । न च सकलज्ञानाभावादेः किञ्चिल्लिङ्गादिकमस्ति । उदासीनपदार्थज्ञानानां नियमेन स्मरणाजनकानामभावस्यानुमातुमशक्यत्वात् । व्यवहाराभावस्य ज्ञानाभावानियतत्वात् । तस्यापि दुर्ग्रहत्वात् । करणव्यापाराभावस्य प्रागसिद्धेः दुःखाभावत्वेन दुःखाभावोपस्थितौ वा तत्सुखारोपासंभवेन सुखाकारपरामर्शो न स्यात् । अस्ति च दुःखाभावस्य सुखविरुद्धत्वज्ञानवतामपि तदाकारपरामर्शः ।

दुःखविरोधीत्युपलक्षणं दुःखतुल्यविषयकस्मरणमपि । नास्तीति नेदमप्यनुमानमित्यर्थः । प्रतियोगिनोऽन्यत्र वर्तमानत्वलिङ्गं दूषयति—नवेति । दुःखम्-अन्यकालीनं दुःखमित्यर्थः । सुषुप्तौ दुःखसत्त्वेऽपि कालान्तरीयदुःखाभावस्यापि संभवान्नानेन सकलदुःखाभावसिद्धिरित्याहतदभावस्येति । माऽस्तु सकलदुःखाभावसिद्धिरित्यत आह-सुखमहमिति । एतस्यानुमितत्वायोगेन स्मृतित्वेऽपि दुःखाभावविषयतया तत्स्मृतित्वमेव किन्न स्यादित्यत आह नापीति । स्वापे दुःखाभावानुभवायोगेन तत्स्मरणस्याप्ययोगादित्यर्थः । सुषुप्तिकालीनोऽहं सकलदुःखरहित इति

पक्षविशेषणमपि दुर्ग्रहमित्याह-कालविशेष इति । सक-लज्ञानाभावः प्रत्यक्षेणैव ज्ञायत इत्याशङ्क्य तस्य वर्तमा-नमात्रग्राहकत्वान्नैवमित्याह-न हीति । अनुभवं विनेति । नित्यसाक्षिरूपानुभवं विनेत्यर्थः । अस्तु तर्हि लिङ्गेन तद-वगमस्तत्राह-न चेति । किं स्मरणाभावो ज्ञानाभावे लिङ्ग-मुत व्यवहाराभावः, किं वा सामग्र्यभावः? । नाद्यः । उपे-क्ष्यज्ञानाभावासिद्धेरित्याह-उदासीनेति । न द्वितीयः । मौनिनां व्यवहाराभावेऽपि ज्ञानसत्त्वादित्यभिप्रेत्याह-व्यवहारेति । स्वापे व्यवहाराभावज्ञानायोगादपि न तल्लिङ्गमित्याह-तस्यापीति । तृतीये सामग्र्यभावः किं कार्याभावगम्य उत करणव्यापाराभावगम्यः? । नाद्यः । परस्पराश्रयात् । अत एव न द्वितीय इत्याह-करणेति । दुःखाभावानुमितिमङ्गीकृत्यापि तस्याः सुखाकारत्वम-नुपपन्नमित्याह-दुःखाभावेति । दुःखाभावसुखयोरितरे-तरानात्मत्वाज्ज्ञानदशायामेवायमारोप इत्याशङ्क्याह-अस्ति चेति । किं च येन रूपेणाधिष्ठानप्रतीतिः, तत्स-मानाधिकरणस्यैवारोप्ये प्रतीतिनियमात् दुःखाभावः सुखमित्येवारोपः स्यादित्याह-भवन्नपीति ।

भवन्नपि वा सुखारोपो दुःखाभावः सुख-मित्येव स्यात् । एतेन सुषुप्तित्वलिङ्गेन दुःखा-भावानुमानं प्रत्युक्तम् । निखिलविशेषविज्ञान-विरहलक्षणसुषुप्तित्वस्य ग्रहीतुमशक्यत्वादित्यु-क्तत्वात् । व्याप्तिलिङ्गादिप्रतिसन्धानं विनापि वर्णितपरामर्शदर्शनाच्च । अत एव पूर्वदिने स्वप्ने चानुभूतजन्यसुखविषयो भवत्विति प्रत्युक्तम् ।

'सुखमहमस्वाप्सम्, न किञ्चिदवेदिषम्' इति स्वापकालीनत्वनिखिलविषयाज्ञानकालीनत्वयोरपि परामृश्यमानत्वात् तच्च सुखजन्यं न भवति, तदा तत्कारणाभावात् । अजन्ये चात्मधर्मे सुखे प्रमाणाभावादात्मैव तत्सुखम् । कथं तर्हि निर्दुःखमहमस्वाप्समिति परामर्श इति चेत् नायं परामर्शः । तद्धेत्वनुभवाभावादित्युक्तम् । किं तु सुप्तावहं निर्दुःखमासं परामर्शजनकसंस्कारकारणानन्दाभिव्यक्तिरूपत्वात् । परामृश्यमानसुखकालीनजाग्रत्कालीनोऽहमित्येवानुभूयत इति । स चात्मा स्वप्रकाशः । "आत्मैवास्य ज्योतिः । अत्रायं पुरुषः स्वयं ज्योतिः" इति श्रुतेः । एवकारेण स्वयमित्यनेन चात्मव्यवहारानुकूलज्योतिषः प्रकाशस्यान्यात्मत्वव्यावर्तनात् ।

सुषुप्त्यवस्था दुःखरहिता सुषुप्तित्वाद्व्यतिरेकेण जाग्रद्वदित्यनुमानं दूषयति—एतेनेति । अनुपलब्धिविरुद्धं चेदमनुमानमित्याह-स्वाप्तीति । नन्वस्य परामर्शस्य सुखविषयत्वेऽपि न स्वापकालीनसुखसिद्धिः । तदितरकालीनसुखविषयत्वादस्येत्यत आह-अत एवेति । अतःशब्दार्थमाह-सुखमहमिति । ननु स्वापकालीनं सुखं परामृश्यमानमात्मभिन्नमेवेत्याशङ्क्य तत्किं जन्यमुताजन्यम्? उभयथाप्यनुपपत्तिरित्याह-तच्चेति । स्वापे दुःखाभावानुभवाभावे कथं तत्परामर्श इति शङ्कते-कथं तर्हीति । यद्यप्यन्तःकरणतद्वृत्तिविशेषतदभावानां केवलसाक्षि-

वेद्यत्वेन दुःखाभावस्यापि स्वापेऽनुभवान्न तत्परामर्शानुपपत्तिः । न च तदा प्रतियोगिज्ञानाभावात्कथं तदभावानुभव इति वाच्यम् । नित्यानुभवस्य तदनपेक्षत्वात् । इतरथा धाराकाले तदितरज्ञानाभावानुभवायोगात् । तथापि तदनुभवाभावमङ्गीकृत्य परिहारान्तरमाह-नायमिति । असौ तर्हि को वानुभव इत्याशंक्यानुमितिरेवेत्याह—किं त्विति । सर्वविषयाभावरूपाज्ञानस्य सुषुप्तेः साक्षिसिद्धत्वान्न पक्षविशेषणासिद्धिः । सुखपरामर्शो हेतौ परामर्शशब्दार्थः । आनन्दाभिव्यक्तिरूपत्वादित्युक्ते दुःखकालीनात्मनि व्यभिचारः । तन्निवारणाय परामर्शेति । सुषुप्तावानन्दरूपात्मनो ऽनुभूयमानत्वे वेद्यतयाऽनात्मत्वप्रसङ्ग इत्याशङ्क्याह- स चेति । नन्वत्रात्मनो ज्योतिष्ट्वमेवोच्यते न तु ज्योतिरन्तराविषयत्वमित्यत आह—एवकारेणेति । ज्योतिष इत्यस्य व्याख्या प्रकाशस्येति ।

एवकारादेर्द्रष्ट्रन्तरव्यावर्तकत्वान्नात्मनः स्वव्यवहारानुकूलप्रकाशात्मत्वसिद्धिरिति शङ्कते-नन्विति ।

ननु घटादिज्ञानवदात्मज्ञानेऽपि विषयातिरिक्तकर्तृकारकत्वशङ्कौ तदेव वार्यते न तु ज्योतिरन्तरमिति चेन्न । ज्योतिष एव विशेष्यत्वात् । मुख्ये संभवत्युपचारस्यान्याय्यत्वाच्च । लाघवेन चैतन्यमात्रस्यैव लक्ष्यत्वाच्च ।

(नवीनमतम्) अत्राह-नवीनः । अत्र नात्मस्वप्रकाशत्वमुच्यते । आदित्यादिज्ञानसाधनानामभावे किं ज्ञानसाधनं जीवस्येतिपृष्टे आत्मैवेत्युक्तम् ।

आत्मा च परमात्मैव । स्वप्नेन शरीरमभिप्रहत्या-सुप्तः सुप्तानभिचाकशीतीति तल्लिङ्गात् । द्युभ्वाद्यधिकरणन्यायेनात्मशब्दस्य परमात्मनि मुख्यत्वाच्च । अस्यायं पुरुषः स्वयं ज्योतिरित्युपसंहरेऽप्यस्येत्यनुषङ्गेणायमीश्वरोऽस्य जीवस्य स्वयमेव ज्योतिर्ज्ञानहेतुरित्येवं परः । ज्ञानसाधनप्रायपाठात् । आत्मैवास्य ज्योतिरिति ज्योतिरात्मनोर्भेदनिर्देशाच्चेति । तन्न । तथा सति एवेति स्वयमिति च श्रुतिद्वयविरोधात् ।

द्रष्टुः श्रवणे तस्यान्यत्वं व्यावर्त्येत । न च स श्रूयते । ज्योतिष एव विशेष्यतया श्रवणादित्याह-नेति । मुख्यवृत्त्याऽश्रवणेऽपि जघन्यवृत्त्या श्रूयत इत्यत आह-मुख्य इति । तेजोवाचिनो ज्योतिःशब्दस्य सिद्धान्तेऽपि ज्ञाने लक्षणैवेत्याशङ्क्य तत्कर्तृलक्षणातस्तन्मात्रलक्षणैव लघीयसीत्याह-लाघवेनेति । ज्योतिःपदस्य चैतन्यकर्तृपरत्वाभावेऽपि न तत्परत्वं प्रश्नप्रायपाठाभ्यां ज्ञानसाधनपरत्वस्यैव वक्तव्यत्वादित्यर्वाचीनमतमनुवदति- अत्राहेति । आदित्यादीति । अस्तमिते आदित्ये याज्ञवल्क्यः । चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किं ज्योतिरेवायं पुरुष इति याज्ञवल्क्यं प्रति जनकेन पृष्टे इत्यर्थः । ज्ञानाश्रयस्य जीवस्य कथमादित्यादिवत् ज्ञानसाधनत्वमित्यत आह-आत्मा चेति । आत्मशब्देन कथमीश्वरपरिग्रह इत्यत आह-स्वप्नेनेति । असुप्त एव सुप्तानभिचाकशीति । सर्वज्ञः

पश्यतीत्युक्तत्वादिपरमात्मलिङ्गस्यैवोत्तरश्रवणादित्यर्थः । यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः तमेवैकं जानथात्मानमिति श्रुतावात्मशब्दः परमात्मनि मुख्य इति "द्युभ्वाद्यायतनं स्वशब्दात्" अ० १ पा० ३ अधि० १ ब्र० सू० १ इत्यधिकरणे निर्णीतत्वात्, अत्रापि स एवात्मशब्दार्थः । तथा च ज्ञानसाधनमेव ज्योतिःपदार्थ इत्याह-द्युभ्वादीति । नन्वत्रायं पुरुषः स्वयं ज्योतिरित्युत्तरवाक्ये प्रत्यक्षसिद्धजीवस्य श्रवणात्तद्विरुद्धः परमात्मपरिग्रह इत्यत आह-अत्रायमिति । "आदित्येनैवायं ज्योतिषाऽऽस्ते, चन्द्रमसैवायं ज्योतिषास्ते" इत्यादिना ज्ञानसाधनेषु ज्योतिःशब्दश्रवणादात्मैवेत्यत्रापि स एव तदर्थ इत्याह-ज्ञानसाधनेति । इदं शब्दार्थस्य तमसो ज्योतिःशब्दार्थस्य ज्ञानस्य च श्रुत्या भेदनिर्देशान्न तयोरभेद इत्याह-आत्मैवेति । परमात्मा जीवज्ञानसाधनमित्यर्थपरत्वकल्पनायामेवकारादिवैयर्थ्यप्रसङ्ग इति दूषयति-तन्नेति ॥

किमनयोरयोगव्यवच्छेदकत्वं उतान्ययोगव्यवच्छेदकत्वम् ? । उभयथाऽप्यसंभव इत्याह-नह्येते इति ।

(एवस्वयंश्रुत्योरयोगान्ययोगव्यवच्छेदकत्वासम्भवः ।)

न ह्येते श्रुती ईश्वरस्यायोगं व्यवच्छिन्त्तः । निखिलजगन्निर्मातुस्तस्य जैवज्ञानेऽयोगशङ्काभावात् । नाप्यन्ययोगं, स्वप्नेऽपि मनःप्रभृतीनां विज्ञानसाधनानां भूयसां सत्त्वात् ।

बाह्यार्थविशेष्यप्रमारूपस्वप्नज्ञानस्य मनःकरणत्वायोगात् । ईश्वरस्यैव करणत्वे ईश्वराख्यप्रमाणान्तरप्रसङ्गाच्च । मनःपदसाधारणसहकारितया बाह्यप्रमां जनयेत् तस्य प्रमाणान्तरत्वनियमात् । ईश्वरस्य साधारणत्वे वा तदतिरिक्तासाधारणकारणाभावात्स्वप्नप्रमाऽयोगात् । अस्त्वीश्वरस्यापि प्रमाणत्वमिति चेन्न । धर्मिग्राहकस्मृत्या सर्वोपादानकर्त्रात्मना स्थितस्य करणत्वायोगात् । ज्ञानसाधनप्रायपाठाभावाच्च ।

तथा हि—नित्यज्ञानस्य करणानपेक्षणादुपक्रमेऽपि व्यवहारनिमित्तप्रकाशविषय एव प्रश्नः । ज्योतिषास्ते पल्ययत इत्याद्युत्तरे तथैव दर्शनात् । न त्वमुकेन जानातीत्युत्तरमस्ति ॥

ननु मनसो बहिरस्वातन्त्र्यात्स्वप्ने कारणान्तरस्योपरमाद्बाह्यार्थविशेष्यकज्ञाने परमात्मैव कारणमित्यन्ययोगव्यवच्छेदेनार्थवत्त्वमित्यत आह-बाह्यार्थेति । तत्र हेतुमाह-मन इति । यन्मानानपेक्षप्रमां यदसाधारणकारणसहकारितया मनो जनयति । ततस्तन्मानान्तरमिति नियमादीश्वरस्यापि प्रत्यक्षाद्यनधीनस्वप्नप्रमायामसाधारणकारणत्वे ततः प्रमाणान्तरत्वं दुर्वारमित्यर्थः । बाह्यप्रमायामेव मनसः करणसहकारित्वं न त्वान्तरप्रमायामिति दर्शयितुं बाह्यप्रमामित्युक्तम् । तर्हीश्वरोऽसाधारणकारणमेव न भवतीत्याशङ्क्याह-ईश्वरस्येति । प्रमायोगादिति । न चेष्टापत्तिः । तस्य

नवीनमते प्रमात्वादिति भावः । ईश्वराख्यप्रमाणान्तरं नानिष्टमिति शङ्कते-अस्त्विति । स्वप्नसृष्टेः परमार्थत्वात्तत्र मानान्तरत्वाभावाच्चेति भावः । "तदैक्षत यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुत्या जगत्कर्तृत्वोपादानत्वरूपेण सिद्धस्य कर्तृपरतन्त्रकरणभावो विरुद्ध इत्यभिप्रेत्याह-न धर्मीति । यदुक्तं ज्ञानसाधनप्रायपाठादात्मनो ज्ञानसाधनत्वमेव ज्योतिःपदेनोच्यत इति तदप्यसिद्धमित्याह-ज्ञानसाधनेति । किं नित्यज्ञानसाधनत्वेनादित्यादिप्रायपाठ उत वृत्तिज्ञानसाधनत्वेन ? । नाद्य इत्याह-नित्येति । न द्वितीयः स्वप्ने वृत्तिज्ञानसाधनप्रायपाठ इत्याह-उपक्रमेऽपीति । पल्ययते—परितो गच्छतीत्यर्थः ।

नन्वादित्यादिज्योतिषः स्वतो व्यवहाराजनकत्वेन वृत्तिद्वारेणैव तद्वक्तव्यम् । तद्वदात्मनोऽपीत्यत आह-एवमिति ।

(आत्मशब्दस्य द्युभ्वाधिकरणेन परमात्ममात्रपरत्वाशङ्कानिरसनम् ।) एवं परंपरानिमित्तेषूक्तेषु साक्षाद्व्यवहारनिमित्तप्रश्नस्योत्तरमात्मैवास्य ज्योतिरिति । तथा चात्मैवात्मादिव्यवहारनिमित्तम्—प्रकाश इत्येवार्थः । न त्वस्य ज्ञानकरणमीश्वर इति । आत्मैवास्येति भेदनिर्देशोऽपि अहमर्थातिरिक्तात्मप्रकाश इति न विरुध्यते । अत एवोपसंहारेऽपि नानुषङ्गगौरवम् । अयमिति च प्रश्नेष्विव जीवपरामर्शोऽप्युपपद्यते । यच्चात्मशब्दस्य परमात्मन्येव मुख्यत्व-

मिति; तन्न । किं जीवे शक्तिग्रहनिमित्तप्रचुरप्रयोगाभावादात्मपदस्य न शक्तिः, किं वाऽऽत्मशब्दस्य सति योगे न रूढिः । योगश्च न परिच्छिन्ने जीव इति । अथवाऽऽत्मशब्दाज्जीवप्रत्ययस्य लक्षणयाप्युपपत्तौ न जीवे तच्छक्तिरिति । नाद्यः । श्रुतौ स्मृतौ लोके च जीवेऽप्यात्मशब्दस्य प्रचुरप्रयोगसत्त्वात् । नापि द्वितीयः । जीवस्याणुत्वनिरासेन स्वाभाविकमध्यमपरिमाणस्याप्ययोगाद्योगयुक्तत्वात्

साक्षाद्व्यवहारनिमित्तप्रकाशप्रश्नोत्तरमेवं सति भवतीत्याह-तथा चेति । यदुक्तमस्येति भेदनिर्देशाज्ज्योतिष्ट्वमात्मनोऽनपपन्नमिति । तन्न । व्यवहर्तुरहमर्थस्यैवेदंशब्दार्थत्वात्तद्भिन्नाकरणात्मनो ज्योतिष्ट्वोपपत्तेरित्याह-आत्मैवेति । अत्रायं पुरुषः स्वयं ज्योतिरित्यस्याप्यस्येत्यनुषंगमन्तरेणैवार्थवत्त्वान्न तदनुषंगः कार्य इत्याह-अत एवेति । किं ज्योतिरेवायं पुरुष इति प्रश्नेऽयमिति पदस्य जीवपरत्वादत्रायं पुरुष इत्यत्रापि जीव एवायं पदार्थ इत्याह-अयमिति चेति । यच्चोक्तं द्युभ्वाद्यधिकरणन्यायेनात्मशब्देन परमात्मैव कथ्यत इति, तदनूद्य दूषयति यच्चेति । जीव एवात्मपदस्य शक्तिरितिवक्तुं तत्र शक्त्यभावे बीजं विकल्पयति-किं जीव इति। सति योग इति । अतति व्याप्नोतीत्यात्मेति योगे सति न रूढिः कल्प्या, क्लृप्तयोगस्य कल्प्यरूढिबाधकत्वादित्यर्थः। "यः प्राणेन प्राणिति, स आत्मा सर्वान्तरः । आ-

त्मानं रथिनं विद्धि, य आत्मनि तिष्ठन्नात्मानमन्तरोऽयमयमात्मा ब्रह्म" इत्यादिश्रुतौ,—

उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।
यावद्बुद्धीन्द्रियप्राणैरात्मनः सन्निकर्षणम् ॥
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति" ।

इत्यादि स्मृतौ, ममाऽऽत्मा सुखी, तवात्मा दुःखीत्यादिवृद्धप्रयोगे च जीव एवात्मशब्दप्रयोगान्न प्रथम इत्याह-नाद्य इति । यौगिकत्वपक्षेऽपि जीवो मुख्योऽर्थः । तत्रापि योगसंभवादित्याह-नापीति ।

तृतीये आत्मशब्दस्य भेदिमते जीवे शक्तिरीश्वरे तु लक्षणैवेति युक्तम् । जीवे प्रथमगृहीतशक्तिग्रहस्य बाधकाभावादित्यभिप्रेत्याह- नापि तृतीय इति ।

आत्मशब्दस्य जीवे एव शक्तिःपरमात्मप्रतीतिर्लक्षणयेति समर्थनम् । नापि तृतीयः । प्राथमिकवृद्धप्रयोगानुरोधेन जीव एव तच्छक्तिः । परमात्मनि त्वाकाशादिशब्दवल्लक्षणैवेति वैपरीत्यस्यैवोचितत्वात् ।

अथ मुख्यार्थसंबधितया ज्ञायमाने लक्षणा । न च परमात्मा शब्दादृते ज्ञातुं शक्यते इति नियोग इव लिङादेरात्मादिपदस्य तत्रैव शक्तिर्न जीवे इति चेत् । किं मानान्तरेण वाच्यार्थसम्बन्धितया ज्ञायमाने लक्षणा, किं वा यद् वस्तुतो वाच्यार्थसम्बन्धि मानान्तरेण गृह्यते तत्र ? ।

नाद्यः । लौकिकानामात्मादिपदाज्जीवादिप्रतीत्यभावप्रसङ्गात् । तेषां त्वदभिमतेश्वराज्ञानात् । न च तेषां जीवे आत्मपदशक्तिभ्रमात्ततस्तदवगम इति वाच्यम् । प्रयोगप्राचुर्येण तदवगतशक्तिज्ञानस्य बाधकाभावात् ।

ननु जीववाचकत्वेऽनेकव्यक्तिवाचकत्वगौरवम्, ईश्वरवाचकत्वे तु लाघवमिति बाधोस्तीति चेत् तर्हि जीवत्वमेवार्थोऽस्तु । प्रथमावगतप्रयोगप्राचुर्यात् । ईश्वरे च सर्वज्ञादिशब्दोपस्थिते तत्सन्निधिपाठाल्लक्षणया तदवगमः । नियंतृत्वादिविषयाद्वाक्याज्जीवसंबन्धित्वेन परस्यावगतत्वात् । लिङादिशब्दस्य प्रथमावगतधात्वर्थव्युत्पत्तौ तु न किञ्चिद् बाधकम् । गौरवस्य तुल्यत्वादिति न तस्य तत्र शक्तिज्ञानम् । तदभावे च न लौकिकलिङादिश्राविणां ततः क्रियावगमः संभवति । लक्षणाप्रकारस्य तत्रासम्भवात् ॥

मुख्यार्थसंबन्धितया ज्ञायमानत्वस्य लक्षणाबीजस्य शास्त्रैकगम्ये परमात्मन्यभावान्न तत्र लक्षणा, किं तु शक्तिरेव, गुरुमतेऽपूर्वनियोगे लिङादिपदस्येवेति शङ्कते-अथेति । वाच्यार्थसंबन्धित्वस्य ज्ञानत्वमपि लक्षणाबीजमुत तत्संज्ञामात्रमिति विमृशति-किमिति । आद्ये तव मते प्राकृतानामात्मलिङादिपदैर्जीवक्रियाकार्याद्यवगमो न स्यात् । वाच्येश्वरादिसंबन्धित्वेन

जीवादेरज्ञानादित्याह-नाद्य इति । ननु लौकिकानां न लक्षणया जीवावगमः, किं तु शक्तिभ्रमादित्याशङ्क्य शक्तिग्रहस्य बाधकाभावान्न भ्रमत्वमित्याह- न च तेषामिति । बाधकाभावोऽसिद्ध इति शङ्कते-नन्विति । जीवानामनेकत्वेऽपि तदनुगतात्मत्वस्यैव प्रथमावगतस्य वाच्यत्वसम्भवान्न गौरवमिति भेदवादिनं शिक्षयति तर्हीति । ईश्वरस्यापि पूर्वमनुपस्थितस्य कथं लक्षणयाऽवगम इत्यत आह- ईश्वरे चेति । वाच्यार्थसंबन्धित्वेनावगत एव लक्षणेत्यभिनिविशमानं प्रत्याह-नियन्तृत्वादीति । नियोगदृष्टान्तोऽप्यसम्प्रतिपन्न इत्याह-लिङादीति । बहूनां धात्वर्थलक्षणकार्याणां लिङादिपदवाच्यत्वे गौरवमित्याशङ्क्य नियोगस्यापि प्रतिविषयं भिन्नत्वात्तद्वाच्यत्वेऽपि गौरवं तुल्यमित्याह- गौरवस्येति । एवं तर्हि क्रियायामेव शक्तिरित्यत्र किं नियामकमित्यत्राह- तदभाव इति । लक्षणयैव ततः क्रियावगम इत्याशङ्क्याह- लक्षणेति । वाच्यार्थसंबन्धित्वेन मानान्तरेणाधिगतलक्षणलक्षणाहेत्वभावादित्यर्थः । न च शक्तिभ्रमादेव क्रियाकार्यावगम इति वाच्यम् । प्राथमिकशक्तिग्रहस्य बाधकाभावेन भ्रमत्वायोगादित्यादिकमत्रापि द्रष्टव्यमिति भावः ।

वस्तुतो वाच्यार्थसंबन्धे सति उपस्थिते लक्षणेति पक्षे ईश्वरे न लक्षणाविरोध इत्याह-नापि द्वितीय इति ।

आत्मशब्दस्योभयत्रापि जीवात्मनोर्मुख्यत्वम् । नापि द्वितीयः । ब्रह्मणि

वस्तुतो जीवसंबन्धस्य वाक्यान्तरस्य च सत्त्वात् ।

सर्वज्ञादिरूपं ब्रह्मानवगच्छतामात्मादिपदैः परमात्मबुद्ध्यभावात् । नियोगे च तर्कोपस्थिते लिङ्गादिनाऽनवगात् तर्को न मानमितिचेन्न । यथार्थोपस्थितिमात्रस्यैव लक्षणायामपेक्षितत्वात् । तर्कस्यापि नियोगगोचरस्य यथार्थत्वात् । ततो भेदिनां मते आत्मत्वप्रवृत्तिनिमित्तकमात्मत्वनिष्ठं वाऽऽत्मपदमुभयत्रापि मुख्यम् । सिद्धान्ते त्वेकव्यक्तिजात्यभावाज्जीवेश्वरस्वरूपभूतमपरिमितत्वविशिष्टं चैतन्यमात्मपदार्थः । लोकेऽहमनुभवे प्रकाशमानचैतन्ये "एष त आत्मा सर्वान्तरः। एष ते आत्माऽन्तर्याम्यमृतः। आत्मैवास्य ज्योतिः। अयमात्मा ब्रह्म सर्वानुभूतात्मन आकाश" इत्यादौ च सर्वान्तरचैतन्ये जगत्कारणे चात्मशब्दप्रयोगात् । अहमनुभवे प्रकाशमानचैतन्यस्याहङ्कारेन्द्रियशरीराद्यधिष्ठानतया सर्वान्तरत्वाद्। ईश्वरस्यापि तदभेदेनैव सर्वान्तरत्वम्। अन्यथा जीवापेक्षया तस्य कथमप्यान्तरत्वानुनपत्तेः ॥

वाक्यान्तरस्येति । सर्वज्ञादिपदयुक्तवाक्यान्तरस्येत्यर्थः । नन्वेवं सति वाक्यान्तराश्रुतावात्मपदादीश्वरो न प्रतीयेतेत्याशङ्क्येष्टापत्तिरित्याह-सर्वज्ञादीति । नियोगे लिङ्गादिपदव्यतिरिक्ततदुपस्थापकाभावात्कथं लक्षणेत्याशङ्क्याह-नियोगे चेति । यदि क्रियाति-

रिक्तं कार्यं न स्यात्तर्हि स्वर्गकामिकृतिसाध्यं न स्यात् । काम्यमानसाधनस्यैव कामिकृतिसाध्यत्वादित्यादि विमर्शस्तर्कशब्दार्थः । मानेनैवोपस्थितिर्लक्षणाहेतुर्नोपस्थितिमात्रमिति शङ्कते-तर्क इति । विशेषणवैयर्थ्येन परिहरति-न यथार्थेति । एवमात्मपदस्य जीवलक्षकत्वेऽभिमते वैपरीत्यमापाद्य तन्मते वस्तुवृत्तमाह-तत इति । आत्मत्वनिष्ठमिति । जीवपदार्थवादेनोक्तमुभयत्रेति । जीवेश्वरयोरित्यर्थः । सिद्धान्ते तु योगवृत्त्यैव जीवेश्वरस्वरूपभूतचैतन्ये प्रवृत्तिः संभवति । योगे रूढेरकल्प्यत्वात् । योगश्चात्रापरिच्छिन्नत्वम् । तथा चोक्तम्—

"यच्चाप्नोति यदादत्ते यच्चातिविषयादिह ।
यच्चास्य संततो भावस्तस्मादात्मेति गीयते" इति ।

एतदभिप्रेत्याह-सिद्धान्ते त्विति । नन्वेवमाकाशादेरप्यपरिच्छिन्नस्यात्मपदात्प्रतीतिः स्यादित्याशङ्क्य पङ्कजपदेन तामरसवल्लौकिकवैदिकप्रयोगप्राचुर्यादुक्तचैतन्यस्यैव प्रतीतिरित्यभिप्रेत्यात्रैव लौकिकवैदिकप्रयोगप्राचुर्यं दर्शयति-लोके इति । अपरिच्छिन्नचैतन्यस्य कथं सर्वान्तरत्वमित्याशङ्क्य सर्पं प्रति रज्जोरिवेत्याह-अहमनुभवइति । विपदाद्यधिष्ठानेश्वरस्य कथमहंकाराद्यपेक्षयाऽऽन्तरत्वमित्यत आह-ईश्वरस्येति । जीवेश्वराद्रूदे तदकार्यस्य तद्बाह्यतरत्वमित्याशङ्क्य त्वज्जीवेश्वरयोः परस्परापेक्षयान्तरत्वासंभवेनोभयोरपि सर्वान्तरत्वं न स्यादित्यभिप्रेत्याह-अन्यथेति ॥

फलितमाह-तथाचेति ।

( योगव्युत्पत्त्या आत्मनः सर्वव्यापकत्वम् ) तथा चायमात्मशब्दो यौगिक एव क्लृप्तयोगे सति रूढेरकल्पनात् । योगश्च अतति व्याप्नोतीति व्यापकत्वम् । व्यापकत्वञ्च जीवेश्वरस्वरूपभूतं चैतन्यं, तदेव-रज्जुरिवसर्पं, सर्वं व्याप्नोतीति । यत्तु ब्रह्मलिङ्गमुदाहृतं, तदस्मन्मते न विरुध्यते । जीवस्यैव स्वरूपत्वाद् ब्रह्मणः स्वेन भासा स्वेन ज्योतिषा प्रस्वपतीति प्रस्तुत्य "अत्रायं पुरुषः स्वयं ज्योतिः" इति वाक्ये स्वापो जीवलिङ्गं, तदनात्मनि ब्रह्मणि विरुध्यते । तस्य स्वापायोगात् । अनुमानमप्यहमिति व्यवहारः प्रकाशजन्यो व्यवहारत्वात्संमतवत् । आत्मव्यवहार इति वा पक्षनिर्देशः व्यवहारस्यान्यविषयप्रकाशाजन्यत्वाद् व्यवहारजनकः प्रकाशसिध्यन् लाघावादात्मैवेति स्वप्रकाशत्वसिद्धिः । स्वविषयधर्मातिरिक्तप्रकाशजन्य इति वा साध्यम् । अनुभूतिः स्वप्रकाशा अनुभूतित्वात् व्यतिरेकेण घटवदित्याचार्याः ।

आकाशादेः सापेक्षमेव व्यापकत्वं, सर्वव्यापकत्वं तु सर्वाधिष्ठानचैतन्यस्यैवेत्याह-व्यापकत्वं चेति । न चैवं द्युभ्वाद्यधिकरणविरोधः । तत्रेश्वरव्यावृत्तप्रातीतिककर्त्रादिरूपेण द्युभ्वाद्यधिकरणत्वं जीवस्य निरस्तं नत्वशनायाद्यतीतवास्तवरूपेण । नापीश्वर एवात्मशब्दस्य मुख्योऽर्थ इति व्युत्पादितः । तस्य स्वापाद्यसङ्ग-

तत्वात् । स्वशब्दादिति विद्धवन्निर्देशाच्चेति द्रष्टव्यम् । जीववास्तवस्वरूपस्य ब्रह्माभिन्नत्वादसुप्तत्वादिलिङ्गं तत्रोपपद्यत इत्याह-यत्त्वित्यादिना । किं चात्र प्रत्यग्भिन्ने ब्रह्मणि परिगृहीते जीवलिङ्गं स्वापः श्रूयमाणोऽनुपपन्नः स्यादित्याह-स्वेनेति । वासनात्मान्तःकरणवृत्तिरूपदृश्यप्रकाशेन चित्प्रकाशेन चेत्यर्थः । आत्मस्वप्रकाशत्वेऽनुमानमपि प्रमाणमित्याह-अनुमानमिति । वेद्यविषयप्रकाशादेवात्मनः स्वव्यवहार इति वदन्तं प्राभाकरं प्रत्याह-व्यवहारस्येति । तर्हि विषयः प्रकाशो जन्योऽस्तु तत्राह-लाघवादिति । आत्मातिरिक्तप्रकाशस्य तदानन्त्यस्य च कल्पने गौरवाल्लाघवानुगृहीतमनुमानमात्मनः स्वव्यवहारहेतुप्रकाशात्मत्वलक्षणस्वप्रकाशत्वमेव साधयति, स्वविषयत्वस्य चासंभवेन दूषितत्वादिति भावः । मुखत एव जन्यज्ञानं व्यावर्तयन् साध्यान्तरमाह-स्वविषयेति । स्वस्यात्मव्यवहारस्य यो विषयस्तस्य धर्मो जन्यज्ञानादि तत्त्वानधिकरणप्रकाशजन्य इत्यर्थः । परमते जन्यज्ञानेनार्थान्तरत्वनिवृत्तये स्वविषयधर्मातिरिक्तेत्युक्तम् । स्वशब्दः समभिव्याहृतपरः । तथा च न घटादिव्यवहारे साध्यवैकल्यम् । न चेश्वरज्ञानजन्यतयाऽर्थान्तरता । तस्यापि जीवाभिन्नतया स्वविषयत्वात् । अथवाऽऽत्मव्यवहारस्यापि पक्षत्वान्नोक्तार्थान्तरता । यद्वा स्वविषयधर्मनिष्ठगुणत्वावान्तरजात्यनधिकरणप्रकाशजन्य इति साध्यं विवक्षितम् । न च गुणव्यवहारे व्यभिचारः । द्रव्यव्यवहारस्यैव हेतुत्वात् । न चाप्रयोजकम् । आत्मातिरिक्तप्रकाशजन्यत्वे गौरवाद्, आत्मनि तत्संबन्धादेर्दुर्निरूपत्वाच्चेति द्रष्टव्यम् ।

चित्सुखाचार्यानुमानमप्याह-अनुभूतिरिति ॥

साध्यादेर्दुर्निरूपत्वान्नेदमनुमानं साध्वित्यर्वाचीनः प्रलपतीत्याह-अत्रेति ॥

पूर्वोक्तानुमाने-नवीनाक्षेपः ।

अत्र नवीनः—किमिदं स्वप्रकाशत्वम् । न तावद्वृत्त्यव्याप्यत्वम् । आत्मनोऽपि वृत्तिव्याप्यत्वात् । अन्यथा श्रवणादिवैयर्थ्यप्रसङ्गात् । नापि फलाव्याप्यत्वम् । अतीतादौ नित्यातीन्द्रिये चातिव्याप्तेः । नाप्यवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वम् । सुषुप्तिप्रलयादावात्मव्यवहाराभावेनाव्याप्तेः । नाप्यवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वम् । मोक्षेऽव्याप्तेः । तदानीं योग्यतारूपधर्मस्याप्यभावात् । नाप्यवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वात्यन्ताभावानधिकरणत्वम् । मोक्षदशायां तस्याप्यभावात् । न हि तदा ब्रह्मण्यत्यन्ताभावानधिकरणत्वाख्यः कश्चिद्धर्मोऽस्ति । ब्रह्मणस्तथाभूतयोग्यत्वात्यन्ताभावाधिकरणत्वाच्च । अन्यथा ब्रह्मगततद्योग्यताया मिथ्यात्वन्न स्यात् । स्वात्यन्ताभावसमानाधिकरणस्यैव मिथ्यात्वात् । न च व्यावहारिको योग्यताऽत्यन्ताभावो ब्रह्मणि नेति वाच्यम् । ब्रह्मातिरिक्तस्य तस्य व्यावहारिकत्वात् । नापि ब्रह्मणोऽवेद्यत्वम् । तस्य वृत्तिवेद्यत्वात् ॥

तस्य प्रलापमेवाह-किमिदमिति । किं वृत्तव्याप्यत्वं स्वप्रकाशत्वम्, उत फलाव्याप्यत्वम्, अथवा वेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वम्, तद्योग्यत्वं वा, तद्योग्यत्वात्यन्ताभावानधिकरणत्वं वेति किंशब्दार्थः । आद्यं दूषयति । न तावदिति । केवलात्मनो न वृत्तिव्याप्यत्वमपीति मतमाशङ्क्याह-अन्यथेति । केवलस्यैव वेदान्ततात्पर्यगोचरत्वात् तद्विषयवृत्त्यभावे तच्छ्रवणादिवैयर्थ्यापातादित्यर्थः । द्वितीयं दूषयति नापीति । अभिव्यक्तचैतन्यं फलं तस्य तादात्म्येनावच्छेदकत्वम् । घटादेस्तद्व्याप्यत्वं, तदभावत्वं न स्वप्रकाशत्वम् । अतीतादेर्नित्यातीन्द्रियस्य वाऽभिव्यक्तचैतन्यतादात्म्याभावेऽप्यस्वप्रकाशत्वादित्यर्थः । तृतीयं दूषयति नाप्यवेद्यत्व इति । व्यवहाराभावेन तद्विषयत्वस्याप्यभावादिति शेषः । चतुर्थपञ्चमावप्यव्याप्त्या दूषयति-नाप्यवेद्यत्वे सतीत्यादिना । व्यवहारदशायामपि योग्यत्वात्यन्ताभावस्य ब्रह्मणि सत्त्वादसम्भवश्चेत्याह-ब्रह्मण इति ।

ननु तदा ब्रह्मणि तद्योग्यत्वमेव, न तदत्यन्ताभाव इत्याशङ्क्य तस्य मिथ्यात्वनिर्वाहार्थं तदभावोऽपि वक्तव्य इत्याह-अन्यथेति । ननु तद्योग्यताप्रतियोगिकव्यावहारिकात्यन्ताभावानधिकरणत्वमेव तल्लक्षणम् । ब्रह्मणि च न तद्व्यावहारिकात्यन्ताभावः प्रतियोगिसमानसत्ताकाभावस्य तत्सामानाधिकरण्यविरोधात् । किं तु पारमार्थिक एव तदत्यन्ताभावो ब्रह्मणि । तथा च नासम्भव इति चेन्न । ब्रह्मव्यतिरिक्तस्य पारमार्थिकत्वेऽद्वैतहानेः सोऽपि व्यावहारिको वाच्यः । ततश्च तत्समानसत्ताकयोरपि विरोधो ब्रह्मणोऽन्यत्रैव वाच्यः ।

तथा चासम्भव एवेत्यभिप्रेत्याह-न च व्यावहारिक इति । विशेष्यासम्भवमुक्त्वा विशेषणासम्भवमाह-नापीति । किमवेद्यत्वं वृत्त्यव्याप्यत्वं फलाव्याप्यत्वं वा? । नाद्य इत्याह-तस्येति ॥

न द्वितीय इत्याह-नापीति ॥

वृत्त्यव्याप्यत्वलक्षणं निरस्य फलाव्याप्यत्वं निरस्यति ।

नापि फलाव्याप्यत्वमवेद्यत्वम् । ब्रह्मणोऽपि चरमसाक्षात्कारवृत्तिप्रतिबिम्बितचैतन्यव्याप्यत्वात् । ननु वृत्तिबिम्बितचिदभिव्यक्तचैतन्याश्रयत्वं फलव्याप्यत्वं तच्च घटादावेव न ब्रह्मणीति चेन्न । घटादावपि वृत्तिविषयत्वव्यतिरेकेण तदभिव्यक्तचैतन्याश्रयत्वाभावात् । अपरोक्षव्यवहारश्च न तावदपरोक्षज्ञानजन्यो व्यवहारः । धर्मादावप्यलौकिकापरोक्षज्ञानजन्यव्यवहारस्य सत्त्वात् । अनागतगोचरसाक्षात्कारजनकप्रत्यासत्त्यजन्यसाक्षात्कारविवक्षायां स्वरूपज्ञानस्य नित्यत्वादसम्भवः । नाप्यपरोक्षोऽयमित्याकारो व्यवहारः । वस्तुनः अपरोक्षत्वम्-अपरोक्षज्ञानविषयत्वं चेद् घटादिवदात्मनोऽपि वेद्यत्वापत्तिः । अपरोक्षव्यवहारविषयत्वं चेद् वस्तुव्यवहारापरोक्षत्वयोरन्योन्यसापेक्षत्वादन्योन्याश्रयः, अभावे ऽतिव्याप्तिश्च । अस्ति हि गजाभावोऽपरोक्ष इति लोके व्यवहारः । अस्ति च फला-

व्याप्यत्वम् ॥

फलस्वरूपं वदन् ब्रह्मणस्तद्व्याप्यत्वमेव नेति शङ्कते-नन्विति । घटादावनित्यज्ञानविषयत्वव्यतिरेकेणानित्यज्ञानाश्रयत्वाभावात्तदेव फलं तद्विषयत्वं च ब्रह्मणोऽपि तुल्यमित्याह-न घटादाविति । किं च लक्षणवाक्यगतापरोक्षव्यवहारपदेनापरोक्षज्ञानजन्यो व्यवहारो विवक्षितः, लौकिकापरोक्षज्ञानजन्यो वा, अपरोक्षोऽयमित्याकारो वा ? । प्रथममतिव्याप्त्या दूषयति-अपरोक्षेति । द्वितीयमनूद्य दूषयति-अनागतेति । अनागतगोचरो यः साक्षात्कारः तद्धेतुभूता या प्रत्यासत्तिः सामान्यलक्षणादिरूपा तदजन्यश्च यः साक्षात्कारः लौकिकप्रत्यक्षमिति यावत् । तज्जन्यव्यवहारविवक्षायामित्यर्थः । ईश्वरज्ञानजन्यधर्मादिव्यवहारव्यावृत्तये जन्यपदम् । स्वरूपज्ञानस्य नित्यत्वादिति । तथा च लौकिकसाक्षात्कारजन्यव्यवहारविषयताभावादसम्भव इत्यर्थः । तृतीयमपवदति-नापीति । 'अपरोक्षोऽयम्'-इति व्यवह्रियमाणं विषयापरोक्ष्यं किमपरोक्षज्ञानविषयत्वमपरोक्षव्यवहारविषयत्वं वा ? । आद्यमनूद्य दूषयति-वस्तुन इति । द्वितीये वस्तुनोऽपरोक्षत्वे सिद्धे व्यवहारस्यापरोक्षत्वम् । व्यवहारापरोक्षत्वे च वस्त्वापरोक्ष्यमिति परस्पराश्रय इत्याह-अपरोक्षेति । नन्वपरोक्षोऽयमित्येवंरूपशब्दव्यवहारस्य स्वज्ञानजन्यस्य विषयापरोक्ष्यज्ञानं विनैव श्रोत्रग्राह्यत्वान्नोक्तदोष इत्याशङ्क्य दूषणान्तरमाह-अभाव इति । अनुपलब्धिरूपपरोक्षमानगम्यत्वान्न फलव्याप्यत्वमभावस्येत्याह- अस्ति चेति ।

विशेषणविशेष्ययोः परस्परव्याघातादप्यसम्भव इत्याह-यदि चेति ॥

परस्परव्याघातेनाऽसम्भवप्रतिपादनम् ।

यदि चाऽऽत्माऽवेद्यः न तर्ह्यपरोक्षव्यवहारविषयः स्यात् । फलव्याप्यस्यैवापरोक्षव्यवहारविषयत्वात् । यदि स्फुरणाविषयेऽपि स्फुरणे तद्विषयकापरोक्षवृत्तिस्तदविषयकस्फुरणमेव वा स्वभावविशेषाद्व्यवहारमुत्पादयेत्तर्ह्यवैरूप्याय घटादावपि तथैव स्यात् । अन्यथा प्रमेयत्वमपि स्ववृत्तिं विनैव स्वस्मिन्प्रमेयत्वव्यवहारं कुर्यादिति केवलान्वयि न स्यात् । किं च स्वप्रकाशत्वं न तावदात्मस्वरूपं साध्यम् । इष्टापत्तेः । न ह्यात्मनि कस्य चित्प्रद्वेषोऽस्ति । नापि तद्धर्मः । तस्यातात्त्विकत्वेनास्वयंप्रकाशतापत्त्या स्वप्रकाशत्वसाधकानुमानानां बाधितत्वात् । अप्रसिद्धविशेषणश्च पक्षः । न च वेद्यत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वात् शौक्ल्यवदिति सामान्यतस्तत्सिद्धिरिति वाच्यम् । वेद्यत्वाभावमात्रसिद्धावपि विशिष्टसाध्यस्याप्रसिद्धत्वात् । मम मते घटादेः फलाव्याप्यत्वे तत्र साध्यसत्त्वाच्च धर्मत्वं च केवलान्वयि धर्मे व्यभिचारि । किं चात्यन्ताभावप्रतियोगित्वं यदि कुतश्चिन्न व्यावर्तेत । तर्हि तत्रैव व्यभिचारः ।

व्यावर्त्तते चेत् । यतो व्यावर्तते तत्रैव व्यभिचारः । अनुभूतित्वं च न जातिः । जातेर्धर्मिसत्तासमानसत्ताकभेदवद्व्यक्तिसापेक्षत्वात् । नोपाधिः । तदनिरूपणात् ।

फलाव्याप्यत्वलक्षणावेद्यत्वेऽप्यपरोक्षवृत्तिमहिम्नैवापरोक्षव्यवहारोऽस्तु । यदि सुखदुःखादावपरोक्षवृत्तेर्व्यभिचारान्न तद्धेतुत्वं तर्हि स्वरूपस्फुरणं स्वाविषयमेव स्वव्यवहारहेतुरित्यभ्युपगमे घटादावपि तथात्वापातेनातिव्याप्तिः स्यादित्यभिप्रेत्याह-यदीति । स्फुरणस्य स्वव्यतिरिक्ते तद्विषयतयैव व्यवहारहेतुत्वम् । स्वस्मिंस्तु स्वरूपेणैवेत्यभ्युपगमेऽतिप्रसङ्गनाह-अन्यथेति । एवं साध्यनिरुक्तं दूषयित्वा तत्स्वरूपमपि किं पक्षीभूतात्ममात्रं तद्धर्मो वेति विकल्पमभ्युपेत्य प्रथमं दूषयति । किं चेति । न द्वितीय इत्याह-नापीति । स किं तात्त्विको धर्मः, उतातात्त्विकः ? । नाद्यः द्वैतापत्तेः । न द्वितीयः । अधिष्ठानस्यारोपितविपरीतरूपत्वनियमेनास्वप्रकाशत्वापातादित्याह-तस्येति । अवेद्यत्वस्याप्रसिद्धत्वेन तद्घटितसाध्यस्याप्यसिद्धत्वात् । संदेहायोगान्न पक्षताऽपीत्याह-अप्रसिद्धेति । सामान्यतो दृष्टानुमानेन पक्षतदतिरिक्तौदासीन्येनावेद्यत्वसिद्धौ पक्षे संदेहनिवृत्तये केवलव्यतिरेकिप्रवृत्तिरित्याशङ्क्य तथापि विशिष्टसाध्यमप्रसिद्धमेवेति दूषयति-न चेति । असाधारण्यमप्याह-प्रमेति । सामान्यानुमाने च व्यभिचारीत्याह-धर्मत्वं चेति । केवलान्वयि धर्मे विप्रतिपन्नं प्रत्याह-किं चेति । अत्यन्ताभावप्रतियोगित्वं यदि सर्वत्र वर्तते

तर्हि तदेव केवलान्वयीति तत्र व्यभिचारः । यदि न वर्तते तदेवात्यन्ताभावाप्रतियोगितया केवलान्वयीति तत्र व्यभिचार इत्यर्थः । हेतुकृतमनुभूतित्वमपि जातिरूपाधिर्वा ?, नोभयथाऽपीत्याह–अनुभूतित्वं चेत्यादिना । धर्मिसत्तेति सिद्धान्तेऽनुभूतौ तादृशभेदाभावादिति भावः ॥

किं च घटादौ यादृशवेद्यत्वं स्वप्रकाशत्वविरोधि तादृशवेद्यत्वस्याऽऽत्मनि सत्त्वेऽपि तदत्यन्ताभावघटितसाध्यस्याप्युपपत्तेरस्वप्रकाशत्वेनार्थान्तरतेत्याह–अपि चेति ।

स्वप्रकाशत्वविरुद्धवेद्यत्ववत्तयाऽर्थान्तरत्वम् ।

अपि च घटादाविव स्वप्रकाशत्वविरोधिनो व्यावहारिकवेद्यत्वस्य सत्त्वेऽपि तदत्यन्ताभावसंभवेनार्थान्तरमिति । अत्र ब्रूमः । संविदविषयत्वं स्वप्रकाशत्वम् । न चाव्याप्त्यतिव्याप्ती । चिद्रूपस्यात्मनः स्वाविषयत्वात् स्वातिरिक्तसंविदन्तराभावाच्च । संविद्रूपात्मातिरिक्तस्य सर्वस्य संविद्विषयत्वात् । अतीतादेरतीन्द्रियस्यापि वृत्तिगतसंविदवच्छेदकतया तद्विषयत्वात् । अन्यथा जडवृत्तिमात्रादनात्मव्यवहारायोगात् । न चैवमपि संविदगोचरस्तज्जडमेवास्तीति वाच्यम् । स्वतः परतो वाऽसिद्धस्य शङ्कितुमप्यशक्यत्वात् । संविच्च वृत्त्यतिरिक्ता निरूपितैवेति नासंभवोऽपि । अथवाऽवे-

द्यत्वे सत्यपरोक्षव्यवहारयोग्यताऽत्यन्ताभावानधिकरणत्वं स्वप्रकाशत्वमित्याचार्यीयमपि लक्षणमस्तु । तत्र च योग्यतान्तं लक्षणम् । अत्यन्ताभावानधिकरणत्वांशस्तु ब्रह्मणि लक्षणस्यासंभवं व्यावर्त्तयति ।

संविद्विषयत्वाभावः, संविद्विषयान्यत्वं वा संविदविषयत्वं स्वप्रकाशत्वं, तच्चाऽऽत्मस्वरूपमेवारोपिताभावस्याधिष्ठानमात्रत्वादित्यभिप्रेत्याह-अत्रेति अस्मिन् लक्षणे न पूर्वोक्तदोषावसर इत्याह-न चेति । आत्मधर्मज्ञानविषयत्वादव्याप्तिरित्यत आह संविदन्तरेति । अतिव्याप्त्यभावे हेतुमाह-संविद्रूपेति । अतीतादेः फलाव्याप्यत्वेऽपि संविद्विषयत्वान्न तत्रातिव्याप्तिरित्याह-अतीतादेरिति । अतीतादेर्वृत्तिविषयत्वमेव न चित्प्रकाशविषयत्वमित्यभ्युपगमे दोषमाह-अन्यथेति । हेतुगर्भविशेषणं दुःखादौ व्यभिचारादपि न वृत्तिमात्रस्य व्यवहारहेतुतेति द्रष्टव्यम् । जडस्यापि संविदविषयत्वसंभवात्तत्त्वेनार्थान्तरतेत्याशङ्क्याह-न चैवमिति । अयमभिसंधिः-संविदविषयत्वे सति प्रकाशमानत्वं स्वप्रकाशत्वम् । प्रकाशमानत्वं च स्वसत्तायां स्वसत्ताप्रकारकसंशयाद्यगोचरत्वम् तस्य घटादिवत्संविद्विषयत्वम् । अयुक्तत्वनिषेधे स्वरूपप्रयुक्तत्वमेवेति पर्यवस्यति । तथा च न जडत्वेनार्थान्तरतेति । ननु वृत्त्यतिरिक्ता संविदेव नास्ति वृत्तिविषयत्वञ्चात्मनोऽपीत्यसंभव इत्यत आह-संविच्चेति । चित्सुखाचार्यलक्षणमप्यनवद्यमित्याह-अथवेति । अत्रावेद्यत्वं फलाव्याप्यत्वम् । तच्च घटादावति-

व्याप्तिवारणाय । इतरच्च धर्मादौ । अत्र सर्वलक्षणमिति न भ्रमितव्यमित्याह-तत्र चेति । लक्षणस्यासम्भवमिति । लक्षणैकदेशयोग्यत्वासंभवमित्यर्थः । अत्यन्ताभावानधिकरणत्वस्य तत्प्रतियोग्यधिकरणत्वनियमादिति भावः । न च योग्यताया मिथ्यात्वात्तदत्यन्ताभावाधिकरणमेवाऽऽत्मेति वाच्यम् । प्रतियोगिसमानसत्ताकात्यन्ताभावस्य तत्सामानाधिकरण्यविरोधादिति द्रष्टव्यम् ।

अत्रोक्ताव्याप्तिमपवदति-न चैवमिति ॥

अव्याप्तिनिरसनम् । न चैवं मुक्तिकालीन आत्मनि लक्षणाव्याप्तिः । नहीदं स्वप्रकाशस्य स्वरूपलक्षणं, किन्तु जगत्कारणत्ववत्तटस्थलक्षणम् । स्वरूपलक्षणं तु प्रागुक्तमेव । कदाचिद्वेद्यत्वविरुद्धधर्माधिकरणस्यैवात्मनो मुक्तावपि सत्त्वात् । एतेन "स्वप्रकाशत्वं वास्तवमवास्तवं वा ?। आद्ये ऽद्वैतक्षतिः। द्वितीये ब्रह्मणो वस्तुतोऽस्वप्रकाशत्वप्रसङ्गः कल्पितविरुद्धस्वभावत्वादधिष्ठानस्य" इति निरस्तम् । एकस्य त्वदभिमतात्मविलक्षणस्वरूपत्वात्, अन्यस्य कल्पितत्वात् ।

किं च किमस्वप्रकाशत्वम् । स्वप्रकाशत्वधर्मराहित्यं, वेद्यत्वं वा ?। आद्ये इष्टापत्तिः । ब्रह्मणो निर्धर्मकत्वात् । द्वितीयेऽपि वास्तवं न संभवति । ज्ञानात्मनो ब्रह्मणः स्वपरविषयत्वनिराकरणात् । अवास्तवं तु वेद्यत्वं स्वप्रकाशत्वस-

मानसत्ताकं तद्विरोधात्तत्र न संभवति । तदसमानसत्ताकमवास्तवं तु वेद्यत्वं काममिष्यतां, न नः क्षतिः । अत एव व्यावहारिकवेद्यत्वेऽपि पारमार्थिकवेद्यत्वेनार्थान्तरतेति निरस्तम् । व्यावहारिकवेद्यत्वस्य व्यावहारिकघटादिस्वप्रकाशत्वविरुद्धत्वेऽपि पारमार्थिकब्रह्मस्वप्रकाशत्वविरोधित्वं कथमिति च परिभावनीयम् ॥

स्वरूपलक्षणस्यैव कदाचिदभावो दोषः । न तटस्थलक्षणस्य । इदं च ब्रह्मणो जगत्कारणत्ववत्तटस्थलक्षणमेवेत्याह-न हीदमिति । तटस्थलक्षणस्य कदाचित्त्वमात्रेण त्रिकालमितरेभ्यः स्वाश्रयव्यावर्त्तकत्वात्कदाचित्त्वमेव प्रयोजकमित्यभिप्रेत्याह-कदाचिदिति । लक्षणद्वैविध्यकथनादेव तस्य वास्तवत्वादिविकल्पप्रयुक्तदोषो नेत्याह-एतेनेति । स्वरूपलक्षणस्य संविद्विषयात्ममात्रत्वान्नाद्वैतक्षतिः । न चेष्टापत्तिरित्यभिप्रेत्याह--एकस्येति । तटस्थलक्षणं तु मिथ्या, तदधिष्ठानं तु सत्यतया तद्विपरीतमेवेत्याह-अन्यस्येति ।

स्वप्रकाशत्वस्य मिथ्यात्वे यदापाद्यमानमस्वप्रकाशत्वं तन्निवर्त्तव्यमित्याह-किञ्चेति । अधिष्ठानस्य वस्तुत आरोप्यरहितत्वादाद्यमिष्टमेवेत्याह-आद्य इति । द्वितीये तद्वेद्यत्वं वास्तवमवास्तवं वा ? नाद्य इत्याह-द्वितीये इति । द्वितीये ऽपि किं तद्व्यावहारिकं प्रातीतिकं वा ? । नाद्यः । समानसत्ताकयोर्भावाभावयोर्विरोधादित्याह-अवास्तवमिति । द्वितीयमिष्टमेवेत्याह—तदसमानेति । यदुक्तं घटादौ व्यावहारिकवेद्यत्वस्यैव स्व-

प्रकाशत्वविरोधित्वात्तत्संभवेनाव्यर्थान्तरतेति, तत्राह-अत एवेति । समानसत्ताकयोर्भावाभावयोर्विरोधादेवेत्यर्थः । तदङ्गीकृत्यापि स्वरूपलक्षणालक्षितस्वप्रकाशत्वस्य न हानिरित्याह-व्यावहारिकेति । कथमिति । न कथमपीत्यर्थः ॥

यच्चोक्तं ब्रह्मणो वृत्तिवेद्यत्वान्नावेद्यत्वमिति तत्राह-नापीति ।

ब्रह्मणोवेद्यत्वप्रतिपादनम् । नापि ब्रह्मण्यवेद्यत्वस्यानिरूपणं फलाव्याप्यत्वस्यैव तस्य सर्वप्रमाणफलात्मनि तस्मिन्सत्त्वात्, फलस्य चाभिव्यक्तविषयावच्छिन्नचैतन्यात्मनस्तस्मिन्नभावात्, घटः स्फुरति पटः स्फुरतीतिफलस्य विषयावच्छेदव्यवहारात् । चैतन्यात्मनो ब्रह्मणः स्वस्वरूपचैतन्यानवच्छेदकत्वात् । चैतन्यान्तरस्य चाभावात् । घटादेश्च चैतन्यावच्छेदकत्वं निरूपितमिति न तदभावः । अन्तःकरणादि चाभिव्यक्तचैतन्यावच्छेदकम् । न चाविद्यानिवृत्तिरेव फलम् । तस्या एव ज्ञानजन्यत्वात् । तदाश्रयश्च ब्रह्मैवेति तदेव फलव्याप्यं न घटादिरितिवाच्यम् । अविद्यानिवृत्तेश्चैतन्यमात्रत्वेनाश्रयाश्रयिभावाभावात् । अस्तु वा तदपि न फलव्याप्यत्वं विवक्षितम्, किन्त्वभिव्यक्तचैतन्यावच्छेदकत्वमेव । न च ब्रह्मणः फलव्याप्यत्वाभावेऽपरोक्षत्वं न स्यादिति वाच्यम् ।

प्रमात्रव्यवधानेन प्रकाशमानत्वमात्रेणापरोक्षत्वोपपत्तेः ।

प्रमाणफलात्मनीति । तदुक्तमत्र भवद्भिः सुरेश्वराचार्यैः—

"परागर्थप्रमेयेषु या फलत्वेन संमता ।
संवित् सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः" इति ।

फलस्वरूपं प्रदर्शयंस्तद्व्याप्यत्वमाह-फलस्य चेति । प्रमातृधर्मवृत्त्यतिरिक्तफलमेव नास्तीत्याशङ्क्याह-घट इति । आत्मा फलव्याप्यः अपरोक्षत्वात् संमतवदित्याशङ्क्य किं स्वरूपचैतन्यव्याप्यत्वं साध्यते उत स्वातिरिक्तचैतन्यव्याप्यत्वम् ?। नाद्यः। भिन्नयोरेवावच्छेद्यावच्छेदकभावादित्यभिप्रेत्याह-चैतन्येति । द्वितीयं दूषयति-चैतन्यान्तरस्येति । घटादेरपि वृत्तिविषयत्वव्यतिरेकेण न फलव्याप्यत्वम् । तथा च तत्रातिव्याप्तिरित्याशङ्क्याह-घटादेरिति । अनावृतप्रमातृचैतन्यतादात्म्यं विना तदापरोक्ष्यानुपपत्तिरित्यादिकं निरूपितमित्यर्थः । अज्ञानान्तःकरणतद्धर्मव्यतिव्याप्तिमाशङ्क्याह-अन्तःकरणेति । ननु क्रियासाध्यस्यैव फलत्वात्, ज्ञानक्रियासाध्याविद्यानिवृत्तिरेव फलम् । तथा च ब्रह्मैव फलव्याप्यमिति न वाच्यमित्याह-न चेति । हेतुमाह-अविद्येति । आरोपिताभावस्याधिष्ठानमात्रत्वप्रसाधनादिति भावः । अविद्यानिवृत्तिरधिष्ठानाद्भिन्नेतिमतेनाह-अस्तु चेति । अभिव्यक्तचैतन्यावच्छेदकत्वलक्षणफलव्याप्यत्वस्यैव घटादावपरोक्षत्वप्रयोजकत्वाद् ब्रह्मण आपरोक्ष्यं तदभावे न स्यादित्याशङ्क्य हेत्वसिद्ध्या दूषयति-न चेति । अनावृतचैतन्याव्यवधानमेवा-

परोक्षत्वप्रयोजकम् । तच्च घटादौ तेनाध्यासिकतादा-त्म्यप्रयुक्तम् । ब्रह्मणस्तु स्वत एवेति भावः ।

सामान्यादिप्रत्यासत्तिमङ्गीकृत्य लक्षणगतापरो-क्षव्यवहारं निर्वक्ति-व्यवहारस्येति ।

व्यवहारस्यापरोक्षत्वमनागतगोचरसाक्षा-त्कारजनकप्रत्यासत्त्यसहकृतप्रमाणजन्यप्रत्यक्ष-जन्यत्वं घटादिव्यवहारस्यैवंरूपत्वात्, 'अहं ब्रह्मास्मि' इतिव्यवहारस्यापि वाक्यजन्यप्रत्यक्ष-ज्ञानजन्यत्वात्, उक्तप्रत्यासत्तिजज्ञानाजन्यज्ञा-नाकरणकवृत्तिजन्यत्वं वा व्यवहारापरोक्षत्वम् । अहमिति व्यवहारश्चैवंरूपः । धर्मादिव्यवहारश्च नैवम् । न चैवमात्मनो ज्ञानविषयत्वापत्तिः । वृत्तिविषयत्वस्येष्टत्वात् । पूर्णात्मनः स्वातिरि-क्तचैतन्याभावेन तद्विषयत्वस्यैवास्माभिरनङ्गीका-रात् । व्यवहारमात्रे प्रकाशमात्रं कारणं, न तु तद्विषयप्रकाशत्वेन, गौरवात् । आत्मव्यवहारे आत्माभिन्नप्रकाशस्याऽनात्मत्वव्यवहारे च तद्वि-षयप्रकाशत्वेन कारणत्वम् । न च घटादेरपि प्रकाशविषयत्वं माऽस्त्विति वाच्यम् । प्रकाश-मात्रस्य तद्व्यवहारकारणत्वेऽतिप्रसङ्गात् ॥

अत्रानागतगोचरसाक्षात्कारजनकप्रत्यासत्तिपदेन सामान्यादिप्रत्यासत्तिर्विवक्षिता । तथा च वर्तमानत्व-प्रत्यासत्त्या इदं वर्तमानमितिज्ञानविषयधर्मादिव्यव-

हारे नातिव्याप्तिः । वस्तुतस्तु सामान्यादिप्रत्यासत्ते-र्निरसिष्यमाणत्वादपरोक्षज्ञानजन्यत्वं व्यवहारापरो-क्षत्वं, अपरोक्षार्थविषयत्वं वा । अर्थापरोक्ष्यं तु संवि-द्भेदादिति नान्योन्याश्रयादिरिति भावः ।

नन्वात्मव्यवहारस्य नित्यसाक्षिजन्यतया जन्यप्र-त्यक्षजन्यत्वाभावादसम्भव इति तत्राह-अहं ब्रह्मास्मीति । नित्यसाक्षिजन्यात्मव्यवहारसंग्रहाय लक्षणान्तरमाह-उ-क्तेति । अनुमित्यादिजन्यव्यवहारवारणाय ज्ञानाकरण-केत्यादि । अत्राव्याप्त्यतिव्याप्तिशङ्कैव नेत्याह-अहमि-तीति । आद्यलक्षणे प्रत्यक्षज्ञानविषयत्वादात्मनो दृश्य-त्वापत्तिरित्याशङ्क्य न वृत्तिविषयत्वं दृश्यत्वं, किं तु चिद्विषयत्वमेव । तच्च न चिद्रूपात्मन इत्याह-न चैव-मिति ।

नन्वात्मनश्चित्प्रकाशविषयत्वमपि वाच्यम् । इतरथा तद्व्यवहारायोगादित्याशङ्क्य पूर्वोक्तन्यायं स्मारयति-व्यवहारेति । तथाप्यात्मव्यवहाररूपकार्यवि-शेषे तद्विषयप्रकाशरूपकारणविशेषो वाच्य इत्याश-ङ्क्याह-आत्मव्यवहार इति । आत्मनः प्रकाशविषयत्वा-संभवाद् "विज्ञातारमरे केन" इत्यादिश्रुतिप्रसिद्धत्वाच्च प्रकाशाभेद एवात्र विशेषकारणम् । स च यावद्व्यवहारं भेदाभावात्मा कल्पित आत्मातिरिक्तोऽस्तीति भावः । यद्वा यथा ज्ञानसामान्यसामग्रीत एवासति संस्कारेऽनुभवरूपविशेषकार्यम् । यथा वा तत एवासति दोषे स्वतस्त्वमते प्रमारूपकार्यविशेषः एवं प्रकाशमात्रा-देवासति संस्कारे सति भेदे व्यवहारविशेष इत्यर्थः । तर्हि

घटादावपि सामान्यकारणादेव व्यवहारविशेषोऽस्त्वित्याशङ्कामतिप्रसङ्गेन दूषयति-न चेति ।

घटादावपि प्रकाशाभेद एव विशेषकारणमिति मन्वानं युक्तं मत्वाह-घटस्येति ।

घटस्य प्रकाश इत्यनुभवस्यासति बाधके प्रामाण्यत्यागायोगाच्च । न च साध्याप्रसिद्धिः । प्रथमसाध्याभावस्य भावरूपस्य चैतन्यविषयत्वस्य घटादौ प्रसिद्धत्वात् । अत्र गृहीतव्यतिरेकव्याप्तिकस्य पुंसो विनाऽपि साध्यप्रसिद्धिं पक्षे तदनुमानसंभवात् । द्वितीयसाध्ये चापरोक्षव्यवहारविषयसंविद् वेद्या न भवतीति साध्यम् । वेद्यत्वं च संविद्विषयत्वमिति । तदभावसिद्धावर्थात्फलव्याप्यत्वाभावः पक्षे सिद्ध्यति ।

अथ वा वेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वादेर्घटादौ प्रसिद्धस्यानुभूतापरोक्षव्यवहारविषयेऽनुभूतित्वेन हेतुनाऽभावानुमानात् । अर्थादवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वस्यापि पक्ष एव सिद्धेः । न चादृष्टादावसाधारण्यम् । तस्य तर्कानवतारदशायामेव दोषत्वात् । आचार्यानुमाने तु वेद्यत्वमपरोक्षव्यवहारयोग्यं किं चिन्निष्ठात्यन्ताभावप्रतियोगिभावधर्मत्वादिति विवक्षितम् ।

चिज्जडयोर्वास्तवाभेदायोगाद्भेदानुभवविरोधाच्चेत्यर्थः । यच्चोक्तमप्रसिद्धविशेषणः पक्ष इति तद् दूषयति

न चेति । साध्याप्रसिद्धिरिति । दोषायेति शेषः । अ-
भावप्रसिद्धौ प्रतियोगिप्रसिद्धेस्तन्मात्रत्वात्सर्वविद्विषयत्वरू-
पप्रतियोगिनो घटादावनुभूतित्वाभावेन व्याप्ततया
गृहीतत्वादनुभूतित्वहेतोर्व्यतिरेकव्याप्तिपक्षधर्मतयोः-
सत्त्वादाद्यलक्षणलक्षितसाध्ये साम्राज्यमित्यभिप्रेत्याह
प्रथमेति । द्वितीयलक्षणे विशेष्यस्यात्मनि सिद्धस्य पक्ष-
कोटौ निवेशसंभवाद्विशेषणमात्रस्यावेद्यत्वस्य व्यतिरेक-
व्याप्तिमद्धेतुबलात्सिद्धावर्थाद्विशिष्टलक्षणसिद्धिरित्य-
भिप्रेत्याह-द्वितीयेति । अर्थादिति । फलविषयत्वे संवि-
द्विषयत्वायोगादित्यर्थः । फलाव्याप्यत्वस्य मुखतः
साध्यत्वेऽपि न दोषः । इदानीमत्रापि विशिष्टाभाव-
स्यैव साध्यत्वात्, विशिष्टस्य च घटादौ हेत्वभावेन
व्याप्तत्वात्, प्रथमलक्षणवन्न साध्याप्रसिद्धिर्दोषायेत्याह-
अथ वेति । विशेष्यवति विशिष्टाभावो विशेषणभूतवेद्य-
त्वाभावमादायैव पर्यवस्यति । तथा चावेद्यत्वविशिष्ट-
लक्षणसिद्धिरित्याह-अर्थादिति । ननु विशेष्याभावो
विशेषणविशिष्टाभाववत्यदृष्टादौ सपक्षे हेतोरभावादसा-
धारण्यमित्याशङ्क्य तस्यानित्यदोषत्वान्नैतद् दूषकत्व-
मित्याह-न चादृष्टेति । यदप्युक्तं वेद्यत्वं किञ्चिन्नि-
ष्ठात्यन्ताभावप्रतियोगिधर्मत्वादिति सामान्यतो दृष्टा-
नुमानान्न विशिष्टसाध्यसिद्धिरिति । तत्राह-आचार्येति ।
परोक्षव्यवहारविषयत्वात्यन्ताभावे व्यभिचारवारणाय
भावेत्युक्तम् । न चापरोक्षव्यवहारविषयत्वे व्यभिचारः ।
परमते तस्मिन्नेव तदत्यन्ताभावसत्त्वात् । अस्मन्मते
तस्य मिथ्यात्वेन पक्षसमत्वान्न व्यभिचार इति भावः ।

प्रमेयत्वादावुक्तव्यभिचारमनूद्य दूषयति-यत्त्वि-त्यादिना ।

यत्तु केवलान्वयिधर्मे व्यभिचार इति । तदसत् । केवलान्वयिधर्मासिद्धेः प्रमेयत्वादेरपि स्वस्मिन् सम्बन्धाभावेन स्ववृत्त्यत्यन्ताभाववत्त्वात् । न 'चैवं प्रमेयत्वं प्रमेयम्'इति धीर्न स्यादिति वाच्यम् । तस्यास्तद्वृत्तिप्रमेयत्वान्तरविषयत्वात् ।

अथवा भेदो भिन्नः घटाभावे घटो नास्तीत्यादिबुद्धिवत् । प्रमेयत्वस्वरूपमेव तद्बुद्धिविषयः । एवमत्यन्ताभावप्रतियोगित्वेऽपि द्रष्टव्यम् । न च प्रमाविषयत्वाख्यप्रमेयत्वं केवलान्वयिप्रमा तद्विषयातिरिक्तस्य प्रमाविषयत्वस्यैवाभावात् । तयोश्चाकेवलान्वयित्वात् । अतिरिक्तविषयतायाश्च तैरेव निराकरणात् ।

यच्च प्रमात्वमेव प्रमेयत्वम् । परम्परासम्बन्धेन तस्य घटादावपि सत्त्वादिति । तन्न । वृत्तिमदत्यन्ताभावप्रतियोगित्वेनाकेवलान्वयित्वात् ॥

प्रमेयत्वात्यन्ताभावस्य कुत्राप्यभावाद्वृत्तिमदत्यन्ता-भावाप्रतियोगित्वेन तस्यकेवलान्वयित्वमित्याशङ्क्याह-प्रमेयत्वादेरिति । संबन्धाभावेनेति । स्ववृत्तित्वायोगादिति शेषः । प्रमेयत्वस्य स्वस्मिन्नभावे प्रमेयत्वस्य नानात्वादेकस्यापरवैशिष्ट्यमुपपद्यत इति भावः ।

प्रमेयत्वस्यैकत्वेऽपि तत्स्वरूपमेव विशिष्टप्रत्ययविषय इति सदृष्टान्तमाह-अथ वेति । यथा घटभेदो घटभिन्न इति विशिष्टप्रत्ययविषयो घटभेदस्वरूपमेव, भेदे भेदान्तराङ्गीकारेऽनवस्थापत्तेः । यथा वा घटाभावे घटो नास्तीति प्रतीतेस्तत्स्वरूपमेव विषयः । घटाभावे तदभावान्तरस्याभावादेवमत्रापीत्यर्थः । यदुक्तमत्यन्ताभावप्रतियोगित्वाच्चेत्यर्थः । प्रमेयत्वस्यापि नानात्वे नाकेवलान्वयित्वमित्याह-न चेति । अत्र केन चित्ताकिंकापशदेनोत्प्रेक्षितं प्रमात्वमेव प्रमेयत्वम् । तच्च केवलान्वयीति तदनुवदति-यच्चेति । परम्परासम्बन्धेनेति । प्रमात्वाश्रयप्रमाविषयत्वसम्बन्धेनेत्यर्थः । किं प्रमात्वं साक्षादेव केवलान्वयि उत परम्परासम्बन्धेन किं वा तदुभयसाधारण्येन ? । नाद्यः । घटादौ साक्षात्तदभावात् । न द्वितीयः । प्रमायां परम्पराया अभावात् । न तृतीयः । स्वस्मिन्नेवोभयथाऽप्यभावात् । घटत्वादेरपि साक्षात्परम्परासम्बन्धेन केवलान्वयित्वापातात् । तद्व्यक्तितत्प्रकारकज्ञानत्वादिरूपस्य तत्तद्वैशिष्ट्यप्रतिभासाद्यनेकात्मकस्य प्रतिप्रमायां भिन्नत्वेनैकत्वायोगाच्चेत्यभिप्रेत्याह तन्नेति ॥

दूषणान्तरमाह-किं चेति ।

किं च प्रमात्वमेव यदि प्रमेयत्वं तर्हि सर्वमुक्तौ न प्रमेयत्वम् । प्रमाव्यक्तिघटितप्रमात्वस्य तदभावेऽभावात् । ईश्वरज्ञाने तदाऽपि प्रमात्वमस्तीति चेत् तस्याप्रमात्वात् ।

किं च यदि प्रमात्वं घटेऽपि स्यात् तर्हि

प्रमायास्तत इतरभेदानुमानं न स्यात् । विपक्षेऽपि तद्वृत्तेः । न च प्रमात्वसमवायित्वमितरभेदानुमितौ लिङ्गम् । असिद्धेः । स्वरूपसंबन्धस्तु घटेऽपि तुल्यः । लाघवेन प्रमात्वाभावस्यैव तदितरभेदाभावव्यापकत्वाच्च । यत्र यत्संबन्धेन यदत्यन्ताभावस्तत्रैव तद्वृत्तौ विरोधो दत्तजलाञ्जलिः स्यात् । एतेन शब्दप्रतिपाद्यत्वादेरपि केवलान्वयित्वं निरस्तम् । शब्दजन्यज्ञानविषयत्वादेस्तस्य व्यावृत्तत्वात् । प्रमेयत्वादेरात्मन्यभावाच्च न केवलान्वयित्वम् । अनुभूतित्वं च जातिः । कल्पितभेदवत्संविन्निष्ठत्वात् । जातौ च स्वसमानसत्ताको व्यक्तिभेदोऽपेक्ष्यते न तु धर्मिसमानसत्ताकः । अनुभूतिश्च वृत्त्युपहितचैतन्यमिति न वृत्तिभागे व्यभिचारः ॥

व्यक्तिघटितेति । तस्य यथार्थज्ञानत्वादिरूपोपाधित्वादित्यर्थः । मुक्तावनित्यज्ञानाभावेऽपि नित्यप्रमात्वमस्तीति शङ्कते-ईश्वरेति । ईश्वरज्ञानस्य गुणदोषाजन्यत्वात् प्रमाऽप्रमाबहिर्भूतत्वमेवेत्यभिप्रेत्याह-न तस्येति ।

प्रमात्वस्य घटादिवृत्तौ ततः प्रमाव्यावर्तकत्वं न स्यादित्याह-किं चेति । तत इति । प्रमात्वहेतोरित्यर्थः । प्रमात्वस्य घटादौ परम्परासंबन्ध एव, न तु समवायः । तद्वत्त्वमेवेतरभेदानुमाने लिङ्गमिति

चेन्न । प्रमात्वस्योपाधित्वेन प्रमायामपि तत्समवायासिद्धेरित्याह-न च प्रमात्वेति । अस्तु तर्हि तत्स्वरूपसंबन्ध एव लिङ्गमित्यत आह-स्वरूपेति । किं च यत्र प्रमेतरभेदाभावस्तत्र प्रमात्वाभाव इत्येव लाघवाद् व्यतिरेकव्याप्तिर्वाच्या । तथा च प्रमात्वस्य घटादिवृत्तावियं व्याप्तिर्न संभवेदित्याह-लाघवेनेति । घटादौ प्रमात्ववत्तदत्यन्ताभावोऽप्यस्त्येव । तथा च नोक्तव्याप्त्यसंभव इत्याशङ्क्याह-यत्रेति । उक्तन्यायेनाभिधेयत्वादिकमपि न केवलान्वयीत्याह-एतेनेति । अभिधेयत्वादेः सखण्डत्वेन प्रतिपदार्थभिन्नत्वान्न सर्वत्रानुगम इत्याह-शब्देति । स्वमतेनाह-प्रमेयत्वादेरिति । यदुक्तम् अनुभूतित्वं जातिरुपाधिर्वा न संभवतीति । तत्राह-अनुभूतित्वं चेति । यच्चोक्तं जातेर्धर्मिसमसत्ताकव्यक्तिभेदनियतत्वादिति । तत्र धर्मिग्रहापेक्षया धर्मत्वस्य ग्रहे लाघवम् । अनुभूतौ चानिर्वचनीयजातिसमसत्ताकभेदस्त्विष्ट एवेत्यभिप्रेत्याह-जातौ चेति । अनुभूतित्वस्य जडवृत्तावपि सत्वेन व्यभिचारमाशङ्क्याह-अनुभूतिश्चेति । श्रोत्रोपाधौ कर्णे श्रोत्रव्यवहारवदनुभूत्युपाधिवृत्तावनुभूतिव्यवहार इति भावः ।

आत्मनः स्वप्रकाशत्वसाधकप्रमाणविषयत्वेऽविषयत्वे वा न स्वप्रकाशत्वमित्यादिप्राकृतचोद्यस्य नात्रावसर इत्याह-एतेनेति ।

एतेन 'यदि स्वप्रकाशत्वसाधकानुमानमनुभूतिं विषयीकरोति, तर्हि तस्याः वेद्यत्वम् । अथ न विषयीकरोति । तर्ह्यसत्त्वं स्वप्रकाश-

